TRIVANDRUM SANSKRIT SERIES.

NO. XXVIII.

# THE VAIKHANASADHARMAPRASNA

OF

## VIKHANAS

EDITED

BY

T GANAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

**TRIVANDRUM**

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.

1913.

अनन्तशयनसंस्कृतग्रन्थावलिः.

ग्रन्थाङ्कः २८.

# वैखानसधर्मप्रश्नः

महर्षिणा विखनसा प्रणीतः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितः ।

स च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः ।

कोलम्बाब्दाः १०८८, क्रैस्ताब्दाः १९१३.

# PREFACE.

The Vaikhânasadharmaprasna which consists of three Prasnas treats of the castes (वर्ण), mixed castes (जाति) and âsramas as also the respective duties thereof. This Dharmasûtra, as is evident from the name of the work itself as well as from the closing line, 'इति विखनाः', of the work, is written by the sage, Vikhanas.

The manuscript on which the edition is based was obtained from Mr. Kasivadhyar of Mahadanapuram. It is written in Tamil grantha character on palm leaves and almost correct.

TRIVANDRUM T. GANAPATI SÂSTRÎ.

# निवेदना ।

---

वैखानसधर्मप्रश्नाभिधोऽयं ग्रन्थः प्रश्नत्रयात्मकः । वर्णा जातय आश्रमा वर्णजात्याश्रमाणां धर्माश्चात्र प्रतिपाद्यन्ते । अस्य धर्मसूत्रस्य प्रणेता महर्षिर्विखना इति ग्रन्थसमाख्यया 'इति विखना' इति ग्रन्थान्तिमवाक्योक्त्या चावगम्यते । एतत्संशोधनाधारभूतो ग्रन्थस्तु महादानपुरवास्तव्यस्य श्रीकाश्युपाध्यायस्य समीपादानीतः शुद्धप्रायस्तालपत्रमयो द्रमिलग्रन्थलिपिः ।

अनन्तशयनम्.

त. गणपतिशास्त्री.

॥ श्रीः ॥

# वैखानसधर्मप्रश्नः ।

## प्रथमप्रश्नः ।

### प्रथमः खण्डः ।

अथ वर्णाश्रमधर्मम् ॥ १ ॥

ब्राह्मणक्षत्रियवैश्यशूद्रा मुखबाहूरुपादेषु जाताश्चत्वारो वर्णाः, यस्माद् 'ब्राह्मणोऽस्य मुखमासीदि'त्यादिश्रुतिः ॥ २ ॥

पूर्वेषां त्रयाणां निषेकाद्याः संस्कारा विधीयन्ते ॥३॥

तेषां द्विजन्मनां वेदाधिकारः ॥ ४ ॥

तस्माद् ब्राह्मणस्याध्ययनाध्यापनयजनयाजनदानप्रतिग्रहाः षट् कर्माणि भवन्ति ॥ ५ ॥

क्षत्रियवैश्ययोर्यजनाध्ययनदानानि ॥ ६ ॥

क्षत्रियस्य प्रजापालनदुष्टनिग्रहयुद्धानि ॥ ७ ॥

वैश्यस्य पाशुपाल्यकुसीदवाणिज्यानि ॥ ८ ॥

शूद्रस्य द्विजन्मनां शुश्रूषा कृषिश्चैव ॥ ९ ॥

ब्राह्मणस्याश्रमाश्चत्वारः ॥ १० ॥

क्षत्रियस्याद्यास्त्रयः ॥ ११ ॥

वैश्यस्याद्यौ ॥ १२ ॥

तदाश्रमिणश्चत्वारो ब्रह्मचारी गृहस्थो वानप्रस्थो भिक्षुरिति ॥ १३ ॥

इति प्रथमस्य प्रथमः खण्डः ।

अथ द्वितीयः खण्डः ।

उपनीतो ब्रह्मचारी मेखलोपवीताजिनदण्डधारी स्नात्वा तर्पणं ब्रह्मयज्ञं सायंप्रातः सन्ध्योपासनसमिद्धोमौ च कुर्वन् गुरोः पादावुपसङ्गृह्य नित्याभिवन्दी व्रतेनाध्ययनं करोति ॥ १ ॥

स्थिते गुरौ स्थेयाद्, उत्थिते पूर्वमुत्थाय व्रजन्तमनुगच्छेत् ॥ २ ॥

आसीने शयाने च नियुक्तो नीचैरन्वासनशयनं कुर्यात् ॥ ३ ॥

अनुक्तो यत्किञ्चित् कर्म नाचरेत् ॥ ४ ॥

अनुक्तोऽपि स्वाध्यायनित्यकर्माण्याचरेत् ॥ ५ ॥

उष्णाम्बुस्नानदन्तधावनाञ्जनानुलेपनगन्धपुष्पोपानच्छत्रदिवास्वप्नरेतस्स्कन्दस्त्रीदर्शनस्पर्शनमैथुनकामक्रोध-

लोभमोहमदमात्सर्यहिंसादीनि वर्जयित्वा सदा शुश्रूषुर्गुरोः प्रियहितकर्माणि कुर्वीत ॥ ६ ॥

अद्वेषी वाक्चित्तानुकूलः प्रियं सत्यं वदेत् ॥ ७ ॥

आर्तोऽप्यसत्यमप्रियं निन्दां नाचक्षीत ॥ ८ ॥

मधुमांसमत्स्यरसशुक्ताद्यभोज्यभोजनवर्जी भैक्षाचरणं कृत्वा गुरुणानुज्ञातो भैक्षान्नमश्नीयात् ॥ ९ ॥

गुरुवृद्धदीक्षितानामाख्यां न ब्रूयात् ॥ १० ॥

गुर्वभावे तत्पुत्रे च गुरुवत् कर्माचरति ॥ ११ ॥

इति प्रथमस्य द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

ब्रह्मचारिणश्चतुर्विधाः— गायत्रो ब्राह्मः प्राजापत्यो नैष्ठिक इति ॥ १ ॥

गायत्र उपनयनादूर्ध्वं त्रिरात्रमक्षारलवणाशी गायत्रीमधीत्यासावित्रसमाप्तेरत्र व्रतचारी ॥ २ ॥

ब्राह्मः सावित्रव्रतादूर्ध्वमनभिशस्तापतितानां गृहस्थानां गृहेषु भैक्षचरणं वेदव्रतचरणं चरित्वा द्वादश समा विंशतिसमा वा गुरुकुले स्थित्वा वेदान् वेदौ वेदं वा सूत्रसहितमध्ययनं* कृत्वा गार्हस्थ्यानुसरणं कुर्यात् ॥ ३ ॥

---

* अधीयते इत्यध्ययनः। बाहुलकात् कर्मणि ल्युट्। तम्, अधीयमानमित्यर्थः।

प्राजापत्यः स्नात्वा नित्यकर्मब्रह्मचर्यशीलो नारायण-परायणो वेदवेदाङ्गार्थान् विचार्य दारसङ्ग्रहणं करोति ॥४॥

प्राजापत्यस्त्रिसंवत्सरादूर्ध्वं न तिष्ठेदिति ऋषयो वदन्ति ॥ ५ ॥

नैष्ठिकः काषायं धातुवस्त्रमजिनं वल्कलं वा परिधाय जटी शिखी वा मेखली दण्डी सूत्राजिनधारी ब्रह्मचारी शुचिरक्षारलवणाशी यावदात्मनो विप्रयोगस्तावद् गुरुकुले स्थित्वान्नादिभैक्षभोजी भवति ॥ ६ ॥

इति प्रथमस्य तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

दारान् सङ्गृह्य गृहस्थोऽपि स्नानादिनियमाचारो नित्यमौपासनं हुत्वा पाकयज्ञयाजी वैश्वदेवहोमान्ते गृहागतं गुरुं स्नातकं च प्रत्युत्थायाभिवाद्यासनपाद्याचमनानि प्रदाय मधुना तोयेन वा दधिघृतक्षीरमिश्रं मधुपर्कं च दत्त्वान्नाद्यैर्यथाशक्ति भोजयति ॥ १ ॥

भिक्षून् ब्रह्मचारिणोऽतिथीन् वेदविदः श्रोत्रियान् पितृव्याचार्यर्त्विङ्मातुलश्वशुरादीनभ्यागतान् बालवृद्धानार्तश्रान्तांश्च यथार्हं पूजयति ॥ २ ॥

अशक्तोऽप्यग्रं* भिक्षां वा सोदकं दत्त्वा शेषं भुञ्जीत ॥ ३ ॥

दयासत्यशौचाचारयुतः स्वाध्यायतर्पणाभ्यामृषीन्, यज्ञबलिहोमजलपुष्पाद्यैर्देवान्, श्राद्धैः पुत्रैश्च पितॄन्, बलिना भूतान्, अन्नाद्यैर्मनुष्यांश्च नित्यं तर्पयेत् ॥ ४ ॥

ऋणत्र(यैर्मु?)क्तो†ऽनृणो भवति ॥ ५ ॥

इति प्रथमस्य चतुर्थः खण्ड.।

अथ पञ्चमः खण्डः।

गृहस्थाश्चतुर्विधाः—वार्तावृत्तिः शालीनवृत्तिर्यायावरो घोराचारिकश्चेति ॥ १ ॥

वार्तावृत्तिः कृषिगोरक्ष्यवाणिज्योपजीवी ॥ २ ॥

शालीनवृत्तिर्नियमैर्युतः पाकयज्ञैरिष्ट्वाग्नीनाधाय पक्षे पक्षे दर्शपूर्णमासयाजी चतुर्षु चतुर्षु मासेषु चातुर्मास्ययाजी षट्सु षट्सु मासेषु पशुबन्धयाजी प्रतिसंवत्सरं सोमयाजी च ॥ ३ ॥

यायावरो हविर्यज्ञैः सोमयज्ञैश्च यजते याजयत्यधीतेऽध्यापयति ददाति प्रतिगृह्णाति षट्कर्मनिरतो नित्य-

* "ग्रासप्रदानाद् भिक्षा स्याद् अग्रं ग्रासचतुष्टयम्"

† ऋणत्रयनिर्मुक्त इति स्यात्।

मग्निपरिचरणमतिथिभ्योऽभ्यागतेभ्योऽन्नाद्यं च कुरुते ॥४॥

घोराचारिको नियमैर्युक्तो यजते न याजयति, अधीते नाध्यापयति, ददाति न प्रतिगृह्णातीत्युञ्छवृत्तिमुपजीवति नारायणपरायणः सायंप्रातरग्निहोत्रं हुत्वा मार्गशीर्षज्येष्ठमासयोरसिधाराव्रतं वनौषधिभिरग्निपरिचरणं करोति ॥ ५ ॥

इति प्रथमस्य पञ्चमः खण्डः ।

अथ षष्ठः खण्डः ।

गृहस्थः सपत्नीकः पञ्चाग्निभिस्त्रेताग्निभिर्वा वनं यास्यति ॥ १ ॥

आहिताग्निरनाहिताग्निश्चौपासनमारोप्य गृहे मथित्वा श्रामणकीयविधानेनाधायाघारं हुत्वा श्रामणकाग्निमादाय तृतीयमाश्रमं गच्छेत् ॥ २ ॥

पूर्ववदग्न्यालयप्रोक्षणोल्लेखनादि कर्म कुर्यात् ॥ ३ ॥

तृतीयामपि वेदिं परिमृज्य षडङ्गुलाग्रैर्दर्भैः(ग्रंथितो यस्त्रिधा कृतं रज्जु यन्मूले वन्धं?) षट्त्रिंशदङ्गुलप्रमाणं परिस्तरकूर्चं कृत्वा मध्यवेद्यां परिस्तृणाति श्रमणकं श्रामणकयज्ञं यज्ञदैवतविश्वान् देवानित्यन्तमावाह्याज्यं निरूप्य श्रमणकाय स्वाहा श्रामणकयज्ञाय स्वाहा यज्ञदैवतविश्वे-

भ्यो देवेभ्यः स्वाहेत्यन्तं हुत्वा चरुं जुहुयादित्याधानविशेषः ॥ ४ ॥

श्रामणकाग्नेश्चोर्ध्ववेदिर्द्वात्रिंशदङ्गुलायता चतुरङ्गुलविस्तारोन्नता मध्यमा तत्परिगता पञ्चाङ्गुलविस्तारा चतुरङ्गुलोत्सेधाधस्तादूर्ध्ववेदिविस्तारोन्नता तृतीयावेदिर्द्वादशाङ्गुलं मध्ये निम्नं त्रिवेदिसहितं कुण्डं कृत्वाधाय वनस्थो नित्यमौपासनवत् सायंप्रातराहुतीर्हुत्वा महाव्याहृतिभिः श्रामणकाग्निं जुहुयात् ॥ ५ ॥

अपत्नीको दारैरग्निभिर्विना वनं गच्छेत् ॥ ६ ॥

इति प्रथमस्य षष्ठ. खण्डः ।

अथ सप्तमः खण्डः ।

वानप्रस्थाः सपत्नीका अपत्नीकाश्चेति ॥ १ ॥

सपत्नीकाश्चतुर्विधाः— औदुम्बरो वैरिञ्चो बालखिल्यः फेनपश्चेति ॥ २ ॥

औदुम्बरो व्युत्कृष्टफलावाप्य ओषधिभोजी मूलफलाशी वा लवणहिङ्गुलशुनमधुमत्स्यमांसपू(त्य ? तधा)न्याम्लपरस्पर्शनपरवाग्वर्जी देवऋषिपितृमनुष्यपूजी वनचरो ग्रा-

मबहिष्कृतः सायंप्रातरग्निहोत्रं हुत्वा श्रामणकाग्निहोमं वैश्वदेवहोमं च कुर्वंस्तपः समाचरति ॥ ३ ॥

श्रामणकाग्निमेकमेवाधाय जुहोतीत्येके ॥ ४ ॥

वैरिञ्चः प्रातर्यां दिशं प्रेक्षते, तां दिशं गत्वा तत्र प्रियङ्गुयवश्यामाकनीवारादिभिर्लब्धैः स्वकीयानतिथींश्च पोषयित्वाग्निहोत्रश्रामणकाग्निर्भवतीत्यामनन्ति ॥ ५ ॥

फेनप उद्दण्डवैश्वदेवहोमी नारायणपरस्तपश्शीलो (न?भ)वतीत्यामनन्ति ॥ ६ ॥

बालखिल्यो† जटाधरो वल्कलवसनोऽर्काग्निः कार्त्तिक्यां पौर्णमास्यां पुष्कलभुक्(तात्मार्थगृज्यान्यथा?)शेषान् मासानुपजीव्य तपः कुर्यात् ॥ ७ ॥

*आस्यसूर्याग्नि(?) एवाग्निर्भवतीत्यामनन्ति ॥ ८ ॥

(क?) उन्मत्तको निरोधकः शीर्णपतितपत्राहारी चान्द्रायणव्रतं चरन् पृथिवीशायी नारायणं ध्यायन् मोक्षमेव प्रार्थयते ॥ ९ ॥

इति प्रथमस्य सप्तमः खण्डः ।

---

† अस्य लक्षणं फेनपात् प्राग् वक्तव्यम् ।

* 'अस्य सूर्य ए' इति पाठः स्यात् ।

अथाष्टमः खण्डः ।

अपत्नीका बहुविधाः कालशिका उद्दण्डसंवृत्ता अश्मकुट्टा उदग्रफलिनो दन्तोलूखलिका उञ्छवृत्तिकाः सन्दशनवृत्तिकाः कपोतवृत्तिका मृगचारिका हस्तादायिनः शैलफलकादिनोऽर्कदुग्धाशिनो बैल्वाशिनः कुसुमाशिनः पाण्डुपत्राशिनः कालान्तरभोजिन एककालिकाश्चतुष्कालिकाः कण्टकशायिनो वीरासनशायिनः पञ्चाग्निमध्यशायिनो धूमाशिनः पाषाणशायिनोऽभ्यवगाहिन उदकुम्भवासिनो मौनिनश्चावाक्छिरसः सूर्यप्रतिमुखा ऊर्ध्वबाहुका अधोबाहुका एकपादस्थिताश्चेति विविधाचारा भवन्तीति विज्ञायते ॥ १ ॥

इति प्रथमस्याष्टमः खण्डः ।

---

अथ नवमः खण्डः ।

अथ भिक्षुका मोक्षार्थिनः कुटीचका बहूदका हंसाः परमहंसाश्चेति चतुर्विधा भवन्ति ॥ १ ॥

तत्र कुटीचका गौतमभारद्वाजयाज्ञवल्क्यहारीतप्रभृतीनामाश्रमेष्वष्टौ ग्रासांश्चरन्तो योगमार्गतत्त्वज्ञा मोक्षमेव प्रार्थयन्ते ॥ २ ॥

बहूदकास्त्रिदण्डकमण्डलुकाषायधातुवस्त्रग्रहणवेष-

धारिणो ब्रह्मर्षिगृहेषु साधुवृत्तेषु मधुमांसलवणपर्युषितान्नं वर्जयन्तः सप्तागारेषु भैक्षं कृत्वा मोक्षमेव प्रार्थयन्ते ॥ ३ ॥

हंसा नाम ग्रामे चैकरात्रं नगरे पञ्चरात्रं वसन्त-स्तदुपरि न वसन्तो गोमूत्रगोमयाहारिणो मासोपवासिनो वा नित्यचान्द्रायणव्रतिनो नित्यमुत्थानमेव प्रार्थयन्ते ॥ ४ ॥

परमहंसा नाम वृक्षैकमूले शून्यागारे श्मशाने वा वासिनः साम्बरा दिगम्बरा वा ॥ ५ ॥

न तेषां धर्माधर्मौ सत्यानृते शुद्ध्यशुद्धी इत्यादि द्वैतम् ॥ ६ ॥

सर्वसमाः सर्वात्मानः समलोष्टाश्मकाञ्चनाः सर्वव-र्णेषु भैक्षचरणं कुर्वन्ति ॥ ७ ॥

ब्राह्मणानां चातुराश्रम्यं क्षत्रियाणां त्र्याश्रम्यं वै-श्यानां द्व्याश्रम्यं विहितम् ॥ ८ ॥

तत्फलं हि सकामं निष्कामं चेति द्विविधं भवति ॥

सकामं नाम संसारेऽभिवृद्धिं ज्ञात्वा पुत्रलाभादि-काङ्क्षणमन्यत् स्वर्गादिफलाकाङ्क्षणं वा ॥ १० ॥

निष्कामं नाम किञ्चिदनभिकाङ्क्ष्य यथाविहिता-नुष्ठानमिति ॥ ११ ॥

तत्र तन्निष्कामं द्विविधं भवति प्रवृत्तिर्निवृत्तिश्चेति ॥

प्रवृत्तिर्नाम संसारमनादृत्य साङ्ख्यज्ञानं समा-

श्रित्य प्राणायामासनप्रत्याहारधारणायुक्तो वायुजयं कृत्वाणिमाद्यैश्वर्यप्रापणम् ॥ १३ ॥

तत् पुनरपि तपःक्षयजन्मप्रापकत्वाद् व्याधिबाहुल्याच्च न तैः परमर्षयो भवन्ति ॥ १४ ॥

निवृत्तिर्नाम लोकानामनित्यत्वं ज्ञात्वा परमात्मनोऽन्यन्न किञ्चिदस्तीति संसारमनादृत्याच्छित्त्वा भार्यामयं पाशं जितेन्द्रियो भूत्वा शरीरं विहाय क्षेत्रज्ञपरमात्मनोर्योगं ज्ञात्वा यदतीन्द्रियं सर्वजगद्बीजमशेषविशेषं नित्यानन्दममृतरसपानवत् सर्वदा तृप्तिकरं परं ज्योतिस्तत्प्रवेशकमिति विज्ञायते ॥ १५ ॥

इति प्रथमस्य नवमः खण्डः ।

अथ दशमः खण्डः ।

निवृत्त्याचारभेदाद्धि योगिनस्त्रिविधा भवन्ति सारङ्गा एकार्ष्या विसरगाश्चेति ॥ १ ॥

अनिरोधका निरोधका मार्गगा विमार्गगाश्चेति चतुर्विधाः सारङ्गाः ॥ २ ॥

दूरगा अदूरगा भ्रूमध्यगा असम्भक्ताः सम्भक्ताश्चेत्येकार्ष्याः पञ्चधा भवन्ति ॥ ३ ॥

निसङ्ख्यायन्तो विसरगाः ॥ ४ ॥

तत्र सारङ्गाः सारं क्षेत्रज्ञः तं गच्छन्तीति सारङ्गाः ॥

तेष्वनिरोधका अहं विष्णुरिति ध्यात्वा ये चरन्ति, तेषां (प्रमाणधा ? प्राणाया)मादयो न सन्ति ॥ ६ ॥

ये निरोधकाः,(तेषां) प्राणायामप्रत्याहारधारणादयः षोडश कलाः सन्ति ॥ ७ ॥

ये मार्गगास्तेषां षडेव प्राणायामादयः ॥ ८ ॥

ये विमार्गगास्ते नियमयमासनप्राणायामप्रत्याहार-धारणाध्यानसमाधयश्चेत्यष्टाङ्गान् कल्पयन्तो ध्येयं (वि? अ)न्यथा कुर्वन्ति ॥ ९ ॥

इति प्रथमस्य दशमः खण्डः ।

अथैकादशः खण्डः ।

अथैकार्ष्या एका एव आर्ष्या येषां त एकार्ष्याः ॥

तेषु ये दूरगास्तेषामयं मार्गः— पिङ्गलया नाडिकयादित्यमण्डलमनुप्रविश्य तत्रत्येन पुरुषेण संयुज्य ततश्चन्द्रमण्डलं तत्रत्येन पुरुषेण ततो विद्युतं तत्रत्येन पुरुषेण पुनः क्रमेण वैकुण्ठसायुज्यं यन्ति ॥ २ ॥

येऽदूरगास्तेषामयं धर्मः — क्षेत्रज्ञपरमात्मनोर्योगं क्षेत्रज्ञद्वारेण संयोगं कारयित्वा तत्रैव समस्तविनाशं ध्यात्वाकाशवत् सत्तामात्रोऽहमिति ध्यायन्ति ॥ ३ ॥

भ्रूमध्यगाः क्षेत्रज्ञपरमात्मनोर्योगे सत्त्वरूपाग्निद्वारेण भ्रूमध्यं नीत्वा पञ्चभ्योऽङ्गुष्ठादिभ्यः स्थानेभ्य आ(क)र्षणं पुनः पिङ्गलया द्वारेण निष्क्रामणं प्रलयान्तं क्षेत्रज्ञयोगान्तं कुर्वन्ति ॥ ४ ॥

सम्भक्ता† नाम मनसा ध्यानं कुर्वन्ति ॥ ५ ॥

तत्प्रतिपादनागमं श्रोत्रेण शृण्वन्ति ॥ ६ ॥

चक्षुषा देवतागारं पश्यन्ति ॥ ७ ॥

घ्राणेन गन्धमनुभवन्ति ॥ ८ ॥

पाणिना देवतां नमस्कुर्वन्ति ॥ ९ ॥

असम्भक्ता नाम ब्रह्मणः सर्वव्यापकत्वमुक्तं युक्तं, योऽसौ परमात्मा तत् सर्वव्याप्याकाशवत् तिष्ठति, तस्माद् ब्रह्मणोऽन्यं न कुत्रचिदात्मानं प्रतिपद्यतेऽसौ। भ्रूमध्यगतस्यापि संशयान्निष्प्रमाणमेवेत्युक्तं, तस्माद् ब्रह्मव्यतिरिक्तं तन्नोपपद्यते ॥ १० ॥

विविधसाराणां विविधदर्शनाद् विविधगामित्वाद् विसरगाः ॥ ११ ॥

पुरा प्रजापतिरुपदेशगूहनार्थं विसरगपक्षं दृष्टवान्। तं दृष्ट्वा मुनयोऽपि मोहं जग्मुः, किं पुनर्मनुष्याः। विसर-

---

†उद्देशानुसारादसम्भक्तानामिह लक्षणं वक्तव्यम्।

गपशूनामहङ्कारयुक्तानां जन्मान्तरेषु मुक्तिर्नास्ति जन्मनि। तस्माद् विसरगपक्षो नानुष्ठेयः ॥ १२ ॥

विसरगाः केचित् कायक्लेशात् केचिद् येनकेनचिद् ध्यानेन केचिद् येनकेनचिदक्षरेण केचिद् वायुजयादन्यपरमात्मना क्षेत्रज्ञं संयोज्य ध्यायन्त्येव। परमात्मनि संयोगमेव नेच्छन्ति। हृदिस्थ एव पुरुष इति वदन्ति। केचिन्न किञ्चिद् ध्यानमिति यथोक्तानुष्ठानं योग(मि? इ)ति ज्ञात्वा मुक्तिमिच्छन्ति। तेषां विसरगपशूनां जन्मान्तरेषु मुक्तिर्नास्ति जन्मनि। तस्मिन्नेव जन्मनि मोक्षकाङ्क्षिणा विसरगपक्षो नानुष्ठेयः ॥ १३ ॥

सगुणे ब्रह्मणि बुद्धिं निवेश्य पश्चान्निर्गुणब्रह्माश्रये यत्नं कुर्यादिति विज्ञायते ॥ १४ ॥

इति प्रथमस्यैकादशः खण्डः।

अथ वर्णाश्रमधर्मम्, उपनीतो ब्रह्मचारी, ब्रह्मचारिणश्चतुर्विधाः, दारान् सङ्गृह्य, गृहस्थाश्चतुर्विधाः, गृहस्थः सपत्नीकः, वानप्रस्थाः सपत्नीकाः, अपत्नीका बहुविधाः, अथ भिक्षुका मोक्षार्थिनः, निवृत्त्याचारभेदात्, अथैकार्ष्या इत्येकादश ॥ ११ ॥

प्रथमप्रश्नः समाप्तः।

———

अथ द्वितीयः प्रश्नः ।

प्रथमः खण्डः ।

अथ वनस्थस्य श्रामणकम् ॥ १ ॥

गृहस्थः सोमयाजी पुत्रं पौत्रं च दृष्ट्वा तत्पुत्रादीन् गृहे संस्थाप्य मौण्ड्यं कृत्वा प्राजापत्यं कृच्छ्रं चरेत् ॥ २ ॥

वसन्ते शुक्लपक्षे पुण्यर्क्षे पत्न्या सार्धं वनाश्रमं याति ॥ ३ ॥

पूर्वस्मिन् दिवसे कृतस्नानः सङ्कल्प्य कुशोदकं पीत्वोपवासं कुर्यात् ॥ ४ ॥

औपासनहोमं हुत्वाग्निम् 'अयं ते योनिरि'त्यरण्याम् आरोपयेत् ॥ ५ ॥

दर्शपूर्णमासविधानेन दर्भादीन् संगृह्य पूर्ववत् परिस्तरणकूर्चान् परिधीन् समिधो वेणुदण्डोपवीतकमण्डलुवल्कलादीन् सम्भरति ॥ ६ ॥

पूर्वोक्तविधिनाग्निकुण्डं कुर्यात् ॥ ७ ॥

अपरस्मिन् दिवसे वैश्वानरसूक्तेनाग्निं मथित्वा प्रज्वाल्य 'अग्न आयाहि, उपावरोहे'त्यग्निं निधाय पूर्ववत् श्रामणकाग्न्याघारं जुहोति ॥ ८ ॥

प्रणम्याग्निं परिषिच्य 'अग्ने प्रायश्चित्ते त्वमि'ति पञ्चप्रायश्चित्तं हुत्वा आपोहिरण्यपवमानैरात्मानं प्रोक्ष्य

ब्रह्मदैवत्यं वैष्णवं पञ्चवारुणं च प्रधानान् व्याहृत्यन्तं यजेत ॥ ९ ॥

इति द्वितीयस्य प्रथमः खण्डः ।

अथ द्वितीयः खण्डः ।

अग्नेः प्रतीच्यां द्वौ कुशौ पूर्वाग्रौ न्यस्योर्ध्वेऽश्मानं निधाय 'तत्सवितुर्वरेण्यमि'ति दक्षिणपादाङ्गुष्ठाग्रेणाश्मानमधितिष्ठेत् ॥ १ ॥

'तेजोवत् सव' (?) इति वल्कलमजिनं चीरं वा परिधाय पूर्ववन्मेखलादींस्त्रीण्युपवीतान्युत्तरीयं कृष्णाजिनं च द(दा?धा)ति ॥ २ ॥

आचम्य 'स्वस्ति देवे'त्यग्निं प्रदक्षिणं प्रणामं कृत्वा '(अ?स्व)स्ति शन्नो देवीरि'ति स्वमूर्ध्नि प्रोक्ष्य जया(द्याभा? भ्याता)नान् राष्ट्रभृतो व्याहृतीश्च हुत्वा आज्यशेषं प्राणायामेन प्राश्नीयात् ॥ ३ ॥

'योगे योग' इति द्विराचम्य 'शतमिन्नु शरद' इति प्रणामम् 'आगन्त्रा समगन्महो'ति प्रदक्षिणं चादित्यस्य कुर्वीत ॥ ४ ॥

'राष्ट्रभृदसी'त्यूर्ध्वाग्रं कूर्चं गृह्णीयात् ॥ ५ ॥

'ओं भूस्तत्सवितुरों भुवो भर्गो देवस्यों सुवर्धियो यो न' इति पच्छो व्यस्ताम्, 'ओं भूर्भुवस्तत्सवितुरों सुवर्धियो यो न' इत्यर्धर्चाम्, 'ओं भूर्भुवस्सुवस्तत्सवितुरि'ति समस्तां च सावित्रीं जप्त्वा वनाश्रमं प्रविश्य ब्रह्मचर्यव्रतं सङ्कल्पयेत् ॥ ६ ॥

इति द्वितीयस्य द्वितीयः खण्डः

अथ तृतीयः खण्डः ।

तत्पत्नी च तथा ब्रह्मचारिणी स्यात् ॥ १ ॥

स्वयमेवाग्निं प्रदक्षिणीकृत्याज्येन प्राजापत्यं धात्रादिमिन्द्राहुतिं विच्छिन्नमैन्द्रं वैश्वानरदेवं वैष्णवं ब्राह्मं विष्णोर्नुकादीन् प्राजापत्यसूक्तं तद्व्रतबन्धं च पुनः प्रधानान् हुत्वा प्राजापत्यव्रतबन्धनादि स्थित्वा 'देवस्य त्वा' 'यो मे दण्ड' इति द्वाभ्यां पञ्चसप्तनवान्यतमैः पर्वभिर्युक्तं केशान्तायतं वाप्यवक्रं वैणवं द्विदण्डम् आददाति ॥ २ ॥

'येन देव' इति कमण्डलुमृद्ग्रहण्यौ पूर्ववदुपानच्छत्रे च गृह्णाति ॥ ३ ॥

अग्नीन् गार्हपत्यादींश्चोज्ज्वाल्याग्निहोत्रं हुत्वाहवनीये प्राजापत्यं विष्णुसूक्तं च सर्वत्र 'अग्नये स्वाहा सोमाय स्वाहा विष्णवे स्वाहे'ति हुत्वाग्नीनरण्यामारोपयति ॥ ४ ॥

वनेऽद्रौ विविक्ते नदीतीरे वनाश्रमं प्रकल्प्य यथोक्तमग्निकुण्डानि कुर्यात् ॥ ५ ॥

पत्न्या सहाग्नीनादाय पात्रादिसंभारयुक्तो वनाश्रमं समाश्रयति ॥ ६ ॥

इति द्वितीयस्य तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

अग्न्यायतने प्रोक्ष्य खनित्वा लेखाः षडुल्लिख्य स्वर्णशकलं व्रीहींश्च निधाय श्रामणकाग्निं निदध्यात् ॥ १ ॥

वन्यानेव पार्थिवान् वानस्पत्यान् कुलीरोद्धतान् चीर्णान् पुराणान् कुशदर्भानूर्णां(स्तुकां ?) प्लक्षाग्रं सुगन्धिताजिनं (?) गुग्गुलुं हिरण्यशकलान् सूर्यकान्तं च सम्भरति ॥ २ ॥

वानप्रस्थान् ऋत्विजो वृत्वा अग्निं मथित्वा गार्हपत्यादीन् त्रेताग्नीन् पञ्चाग्नीन् वा अग्न्याधेयक्रमेणाधायाहुती द्वे द्वे हुत्वा नित्यं द्विकालं वन्यैरेव जुहोति ॥ ३ ॥

वनाश्रमी मुनिः स्नानशौचस्वाध्यायतपोदानेज्योपवासोपस्थनिग्रहव्रतमौनानीति नियमान् दशैतान् सत्यानृशंस्यार्जवक्षमादमप्रीतिप्रसादमार्दवाहिंसामाधुर्याणीति यमान् दशामूंश्च समाचरति ॥ ४ ॥

भक्त्या विष्णुं ध्यायन् अग्निहोत्रश्रामणकाग्निहोमौ द्विकालं नोत्सृजन् ग्रामाशनं त्यक्त्वा वन्यौषधीः फलमूलशाकं वा नित्याशनं संकल्प्य 'तिरोधाभूरि'त्याहृत्यापराह्णे स्वयं पत्नी वा हविष्यमास्त्रावितं पचति ॥ ५ ॥

वैश्वदेवान्तेऽतिथीनभ्यागतान् प्राशयित्वा मितं प्राश्नाति ॥ ६ ॥

इति द्वितीयस्य चतुर्थः खण्डः ।

अथ पञ्चमः खण्डः ।

रात्रौ नाश्नीयात् ॥ १ ॥

अधस्ताद् दर्भांस्तृणानि वास्तीर्य सुवृत्तः सुव्रतां पत्नीं विनैकः शयीत ॥ २ ॥

सास्य शुश्रूषां करोति, एनां नोपगच्छेद्, मातृवन्निष्कामः प्रेक्षेतोर्ध्वरेता जितेन्द्रियः ॥ ३ ॥

दर्शपूर्णमासौ चातुर्मास्यं नक्षत्रेष्टिमाग्रयणेष्टिं च वन्यौषधीभिः पूर्ववद् यजेदनुकामान् ॥ ४ ॥

मूलैः फलैः पत्रैः पुष्पैर्वा तत्तत्कालेन पक्वैः स्वयमेव संशीर्णैः प्राणं प्रवर्तयन्नुत्तरेऽप्यधिकं तपस्संयोगं फलाद् विशिष्टमाचरेत् ॥ ५ ॥

अथवाहिताग्निः सर्वानग्नीनरण्यामारोप्य सर्वैः संवापमन्त्रैः पार्थिवान् वानस्पत्यांश्च सर्वान् समूह्य निर्मन्थ्यैते(न) विधिनाग्न्याधेयविधानेन च मन्त्रैः सर्वैः सभ्याग्न्यायतने श्रामणकाग्निमाधायाहरेत् ॥ ६ ॥

सभ्यस्य भेदः श्रामणकाग्निरित्याहुः ॥ ७ ॥

अपत्नीकश्च भिक्षुवदग्नौ होमं हुत्वा अरण्यादिपात्राणि च प्रक्षिप्य पुत्रे भार्यां निधाय तथाग्नीनात्मन्यारोप्य वल्कलोपवीतादीन् भिक्षापात्रं च स संगृह्यानग्निरदारो गत्वा वने निवसेत् ॥ ८ ॥

तपसां श्रा(व ? म)कमेतन्मूलं, तस्मादेतद्विधानमेनमग्निं च श्रामणकमित्याह विखनाः ॥ ९ ॥

इति द्वितीयस्य पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।

संन्यासक्रमम् । सप्तत्यूर्ध्वं वृद्धोऽनपत्यो विधुरो वा जन्ममृत्युजरादीन् विचिन्त्य योगार्थी यदा स्यात्, तदा, अथवा पुत्रे भार्यां निक्षिप्य परमात्मनि बुद्धिं निवेश्य वनात् संन्यासं कुर्यात् ॥ १ ॥

मुण्डितो विधिना स्नात्वा ग्रामाद् बाह्ये प्राजापत्यं चरित्वा पूर्वाह्ने त्रिदण्डं शिक्यं काषायं कमण्डलुं पवित्रं

मृद्ग्रहणीं भिक्षापात्रं च संभृत्य त्रिवृतं प्राश्योपवासं कृत्वा दिनेऽपरे प्रातः स्नात्वाग्निहोत्रं वैश्वदेवं च हुत्वा वैश्वानरं द्वादशकपालं निर्वपेत् ॥२॥

गार्हपत्याग्नावाज्यं संस्कृत्याहवनीये पूर्णाहुतिं पुरुषसूक्तं च हुत्वा 'अग्नये सोमाय ध्रुवाय ध्रुवकरणाय परमात्मने नारायणाय स्वाहे'ति जुहोति ॥३॥

इति द्वितीयस्य षष्ठः खण्डः ।

अथ सप्तमः खण्डः ।

स्रुचि स्रुवेण चतुर्गृहीतं गृहीत्वा सर्वाग्निषु 'ओं स्वाहे'ति जुहुयात् ॥ १ ॥

अग्निहोत्रहवणीमाहवनीये मृच्छिलामयेभ्योऽन्यानि पात्राणि गार्हपत्ये प्रक्षिपति ॥ २ ॥

गृहस्थोऽनाहिताग्निरौपासने वनस्थ(स्य ? श्च) श्रामणकाग्नौ होमं हुत्वा पात्राणि प्रक्षिपेत् ॥३॥

पच्छोऽर्धर्चशो व्यस्तां समस्तां च सावित्रीं जप्त्वा भिक्षाश्रमं प्रविशामीति तं प्रविशति ॥ ४ ॥

अन्तर्वेद्यां स्थित्वा गार्हपत्यादीन् 'या ते अग्ने यज्ञिये'ति प्रत्येकं त्रिराघ्राय 'भवतन्नस्समनस' इति आत्मन्यारोपयेत् ॥५॥

भूर्भुवस्सुवः संन्यस्तं मयेति त्रिरुपांशूच्चैश्च प्रैष-मुक्त्वा दक्षिणहस्तेन सकृज्जलं पीत्वाचम्य तथैवोक्त्वा त्रिर्जलाञ्जलिं विसृजेत् ॥ ६॥

मेखलां चत्वार्युपवीतम् (?) एकं वोपवीतं कृष्णाजिनमुत्तरीयं च पूर्ववद् ददाति ॥७॥

इति द्वितीयस्य सप्तमः खण्डः।

---

अथाष्टमः खण्डः।

'देवस्य त्वा, यो मे दण्डः, सखा मे गोपाये'ति त्रिभिस्त्रिदण्डं, 'यदस्य पारे रजस' इति शिक्यं, 'येन देवाः पवित्रेणे'ति अप्पवित्रं, 'येन देवा ज्योतिषे'ति कमण्डलुमृद्ग्रहण्यावाददाति ॥ १ ॥

स्नात्वाघमर्षणसूक्तेनाघमर्षणं कुर्यात् ॥ २ ॥

आचम्य षोडश प्राणायामान् कृत्वा सहस्रं शतं वा सावित्रीं जप्त्वा तया भिक्षापात्रमलाबुं दारवं मृन्मयं वा गृह्णाति ॥ ३॥

प्रणवाद्यादिभिः पृथक् पृथक् सप्तव्याहृतिभिस्तर्पयामीति देवेभ्यो जले अद्भिस्तर्पयित्वाद्या(दि ? भि)श्चतसृभिः स्वधेति पितृ(भि ? भ्य)स्तर्पयेत् ॥ ४॥

'उद्वयं तमस' इत्यादित्यमुपतिष्ठेत ॥ ५॥

जलाञ्जलिं विसृज्याभयं सर्वभूतेभ्यो दद्यात् ॥ ६॥

अध्यात्मरतो यदि भिक्षाशी नियमान् यमांश्च समाचरन् संयतेन्द्रियो ध्यानयोगेन परमात्मानमीक्षेत ॥ ७॥

इति द्वितीयस्याष्टमः खण्डः।

अथ नवमः खण्डः।

धर्म्यं सदाचारम् ॥ १ ॥

निवीती दक्षिणे कर्णे यज्ञोपवीतं कृत्वा उत्कुटिकमासीनोऽहन्युदङ्मुखो रात्रौ दक्षिणामुखस्तृणैरन्तरिते मूत्रपुरीषौ विसृजेत् ॥ २॥

नद्यां गोष्ठे पथिच्छायायां भस्मन्यप्सु कुशे दर्भे वा नाचरेत् ॥ ३ ॥

गोविप्रोदकाग्निवाय्वर्कतारेन्दूनपश्यन् कुर्यात् ॥४॥

वामहस्तेन लिङ्गं सङ्गृह्योत्थायोदकस्य पार्श्वे तथासीनो ब्रह्मचारी गृहस्थोऽपि शिश्ने द्विः हस्तयोश्च द्विर्द्विर्गुदे षट्कृत्वो मृदं दत्त्वोद्धृतैरेव जलैः शौचं कुर्यात् ॥ ५॥

करं वामं दशकृत्वः करावुभौ च तथा मृदाद्भिः प्रक्षालयेत् ॥ ६ ॥

वनस्थस्य भिक्षोश्चैतद् द्विगुणं भवति ॥७॥

रात्रौ यथोक्तार्धं वा ॥ ८ ॥

रेतोविसर्गे मूत्रवच्छौचं कर्तव्यम् ॥ ९ ॥

रेतसस्त्रिरित्येके ॥ १० ॥

सोपवीती प्राङ्मुख उदङ्मुखो वान्यत्रासित्वा मृदाम्बुना पूर्ववत् पादौ पाणी च प्रक्षाल्याचम्याचम्यमन्त्रेणाचामति ॥ ११ ॥

इति द्वितीयस्य नवमः खण्डः ।

---

अथ दशमः खण्डः ।

ब्राह्मणो हृद्गाभिः क्षत्रियः कण्ठगाभिर्वैश्यस्तालुगाभिरद्भिराचामेत् ॥ १ ॥

आत्मानं प्रोक्ष्य प्रत्यर्कमपो विसृज्यार्कं पर्येति ॥२॥

उदकस्याग्नेर्वामपार्श्वे प्राणानायम्य प्रत्येकमोंकारादिसतव्याहृतिपूर्वां गायत्रीमन्ते सशिरस्कां त्रिर्जपेत्॥३॥

सप्राणायामस्त्रीनेकं वा प्राणायामं कृत्वा पूतः शतं दशाष्टौ वा सावित्रीं जप्त्वा सायंप्रातः सन्ध्यामुपास्य नैशिकमाह्निकं चैनोऽपमृज्यते ॥ ४ ॥

द्विजातिः सन्ध्योपासनहीनः शूद्रसमो भवति ॥५॥

ब्रह्मचारी स्वनाम सङ्कीर्त्याभिवादयेद् अहं भोः! इति ॥६॥

श्रोत्रे च संस्पृश्य गुरोः पादं दक्षिणं दक्षिणेन पाणिना वामं वामेन व्यत्यस्य जान्वोरापादमुपसंगृह्णन्नानतशीर्षोऽभिवादयति ॥७॥

आयुष्मान् भव सौम्येत्येनं शंसेत् ॥८॥

अनाशीर्वादी नाभिवन्द्यः ॥९॥

माता पिता गुरुर्विद्वांसश्च प्रत्यहमभिवादनीयाः ॥

इति द्वितीयस्य दशमः खण्डः ।

---

अथैकादशः खण्डः ।

अन्ये बान्धवा विप्रोष्य प्रत्या(गत्या)भिवन्द्याः ॥१॥

ज्येष्ठो भ्राता पितृव्यो मातुलः श्वशुरश्च पितृवत्, पितृष्वसा मातृष्वसा ज्येष्ठभार्या भगिनी ज्येष्ठा च मातृवत् पूजयितव्याः ॥२॥

सर्वेषां माता श्रेयसी । गुरुश्च श्रेयान् ॥३॥

परस्त्रियं युवतिमस्पृशन् भूमावभिवादयेत् ॥४॥

वन्द्यानां वन्दनादायुःश्रीज्ञानबलारोग्यशुभानि भवन्ति ॥५॥

यज्ञोपवीतमेखलाजिनदण्डान् परेण धृतान् न धारयेत् ॥ ६ ॥

उपाकृत्यानालस्यः शुचिः प्रणवाद्यं वेदमधीयानोऽमावास्यायां पौर्णमास्यां चतुर्दश्योः प्रतिपदोरष्टम्योश्च नाधीयीत ॥ ७ ॥

नित्यजपहोमे चानध्यायो नास्ति ॥ ८ ॥

मार्जारनकुलमण्डूकश्वसर्पगर्दभवराहपश्वादिष्वन्तरागतेष्वहोरात्रं, सूतकप्रेतकयोराशौचे तावत्कालं, तिस्रोष्टकासु गुरौ प्रेते च त्रिरात्रमनध्यायं स्यात् ॥ ९ ॥

इति द्वितीयस्यैकादशः खण्डः ।

अथ द्वादशः खण्डः ।

तद्भार्यापुत्रयोः स्वशिष्यस्य चोपरमे मनुष्ययज्ञे श्राद्धभोजने चैकाहमनध्यायं स्यात् ॥ १ ॥

आपदा नप्रायत्यः (?) ॥ २ ॥

वृक्षनौयानशयनेष्वारूढः, प्रसारितपादो, मूत्रपुरीषरेतोविसर्गे, ग्रामेऽन्तश्शवे सति, अभक्ष्यान्नभोजने, छर्दने, श्मशानदेशे, सन्ध्यास्तमिते, भूकम्पे, दिग्दाहे, अग्न्युल्कानिपाते, रुधिरोपलपांसुवर्षे, सूर्येन्दुराहुग्रहणे च तत्तत्काले नाधीयीत ॥ ३ ॥

परत्रेह श्रेयस्करो वेदः, तदध्येतव्यः ॥ ४॥

अन्ते विसृज्य प्रणवं ब्रवीति ॥ ५॥

लौकिकाग्नौ समिधौ हुत्वा भिक्षान्नं मेधाप्रदं शुद्धं मौनी भुञ्जीत ॥ ६॥

पौषे माघे वा मासे ग्रामाद् बहिर्जलान्ते पूर्ववद् व्रतविसर्गहोमं हुत्वा स्वाध्यायमुत्सृज्य पक्षे शुक्ले वेदं कृष्णे वेदाङ्गं च यावदन्तं समधीत्य गुरोर्दक्षिणां दत्त्वा समावृती स्यात् ॥ ७॥

इति द्वितीयस्य द्वादशः खण्डः।

अथ त्रयोदशः खण्डः।

मध्याह्ने जले शुद्धे मृदाद्भिः पादौ हस्तौ च धावयित्वाचम्याङ्गानि संशोध्य 'आपः पुनन्त्वि'ति जले निमज्जेत् ॥ १॥

आचान्तो वैष्णवैर्मन्त्रैर्विष्णुं 'हिरण्यशृङ्गमि'ति वरुणं च प्रणम्य अघमर्षणसूक्तेनाघमर्षणं कृत्वा 'इदमापश्शिवा' इति स्नायात् ॥ २॥

आश्रमिणश्चत्वारः स्नानं नित्यमेवं पूर्वोक्तेन विधिना काम्यं नैमित्तिकं च कुर्वन्ति ॥ ३॥

धौतवस्त्रेणाच्छाद्य पूर्ववदाचम्य प्रोक्ष्यासीनस्तिष्ठन् वा कृतप्राणायामः सावित्रीं जप्त्वादित्यमुपतिष्ठेत ॥ ४ ॥

दक्षिणपाणिना तीर्थेन ब्राह्मेण भूपत्यादीन्, दैवेन नारायणादीन् कृप्यांश्चार्षेण विश्वामित्रादीन्, पैतृकेण पित्रादीनद्भिस्तर्पयित्वा ब्रह्मयज्ञं करिष्यन् नित्यम् 'इषे त्वोर्जे त्वे'ति यथाकामं यजुस्संहितामाद्यांस्त्रीननुवाकान् स्वाध्यायं कुर्वीत ॥ ५ ॥

नैमित्तिकम् 'ऋतं च सत्यं चे'त्यादि सूक्तानि चतुर्वेदादिमन्त्रं चाप्यधीयीत ॥ ६ ॥

सर्वयज्ञानामादिर्ब्रह्मयज्ञः । तस्मादुपनयनप्रभृत्येव द्विजैः कर्तव्यः ॥ ७ ॥

नद्यां तीर्थे देवखाते सरसि तटाके वा सामान्ये स्नानं कुर्यात् ॥ ८ ॥

इति द्वितीयस्य त्रयोदशः खण्डः ।

---

अथ चतुर्दशः खण्डः ।

परस्योदके मृत्पिण्डान् पञ्चोद्धृत्य स्नायात् ॥ १ ॥

कूपे तत्तीरे त्रिः कुम्भेनाभिषिञ्चेत् ॥ २ ॥

उच्छिष्टो नग्नो वा न स्नायात् ॥ ३ ॥

तथा न शयीत ॥ ४ ॥

आतुरोऽप्सु नावगाहेत् ॥ ५ ॥

आतुरस्य स्नाने नैमित्तिके दशकृत्वो द्वादशकृत्वो वा तमनातुरो जलेऽवगाह्याचम्य स्पृशेत् । ततः स पूतो भवति ॥ ६ ॥

द्विकालं होमान्ते पादौ प्रक्षाल्याचम्यासने प्राङ्मुखः प्रत्यङ्मुखो वासित्वा चतुरश्रोपलिप्ते मण्डले शुद्धं पात्रं न्यसेत् ॥ ७ ॥

तत्रान्नं प्रक्षिप्य तत् पूजयति ॥ ८ ॥

द्वौ पादावेकं वा भूमौ निधाय प्रसन्न 'ऋतं त्वा सत्येन परिषिञ्चामी'ति सायं परिषिञ्चति ॥ ९ ॥

'सत्यं त्वर्तेन परिषिञ्चामी'ति प्रातः ॥ १० ॥

'अमृतोपस्तरणमसी'त्या(धावं? दावपः) पीत्वा विधिना प्राणाहुतीर्हुत्वान्नमनिन्दन्नश्नाति ॥ ११ ॥

भुक्त्वा 'अमृतापिधानमसी'त्यपः पीत्वाचम्याचामेत् ॥ १२ ॥

एकवासाः शयानस्तिष्ठन्नस्नानजपहोमी ॥ १३ ॥

शुष्कपाद उदङ्मुखो वा नाश्नाति ॥ १४ ॥

भिन्नपात्रेणान्नं पर्युषितं शयनासनोत्सङ्गस्थं वा न भुञ्जीत ॥ १५ ॥

अञ्जलिनापो न पिबेत् ॥ १६ ॥

उच्छिष्टाशुच्याशौचिपतितैः स्पृष्टं सूतके प्रेतके चान्नं च नाश्नीयात् ॥ १७ ॥

इति द्वितीयस्य चतुर्दशः खण्डः ।

---

अथ पञ्चदशः खण्डः ।

तिलसक्तुदधिलाजं च रात्रावभक्ष्यम् ॥ १ ॥

अन्नं पर्युषितमाज्येन दध्ना वा युक्तं भोज्यम् ॥ २ ॥

कृमिकेशकीटयुतं गवाघ्रातं पक्षिजग्धं च भस्माद्भिः प्रोक्षितं शुद्धम् ॥ ३ ॥

श्वकाकाद्युपहते बह्वन्ने तस्मिन् पुरुषाशनमात्रं तत्रैवोद्धृत्य व्यपोह्य 'पवमानः सुवर्जन' इति भस्मजलैः प्रोक्ष्य दर्भोल्कया स्पर्शयित्वा गृह्णीयात् ॥ ४ ॥

प्रसूतेऽन्तर्दशाहे गोक्षीरं सदैकशफौष्ट्रं स्त्रीणां पयश्च पलाण्डुं कलञ्जं लशुनं गृञ्जनं विट्(जं ? सं)बन्ध्रमनुक्तं मत्स्यं मांसं च वर्जनीयम् ॥ ५ ॥

यज्ञशिष्टं मांसं भक्षणीयम् ॥ ६ ॥

उदक्यास्पृष्टं शूद्रानुलोमैः स्पृष्टं तेषामन्नं च वर्जयेत् ॥ ७ ॥

स्वधर्मानुवर्तिनां शूद्रानुलोमानामामं क्षुधितस्य संग्राह्यम् ॥ ८ ॥

सर्वेषां प्रतिलोमान्तरालव्रात्यानामामं पक्कं च क्षुधितोऽपि यत्नान्न गृह्णीयात् ॥ ९ ॥

तैः स्पृष्टिसम्मिश्रं परपक्कं च सन्त्यजाति ॥१०॥

नित्यं श्रुतिस्मृत्युदितकर्म कुर्वन् मनोवाक्कायकर्मभिः शनैर्धर्मं समाचरति ॥ ११ ॥

इति द्वितीयस्य पञ्चदशः खण्डः ।

अथ वनस्थस्य श्रामणकम्, अग्नेः प्रतीच्यां, तत्पत्नी च तथा, अग्न्यायतने प्रोक्ष्य, रात्रौ नाश्नीयात्, संन्यासक्रमं, स्रुचि स्रुवेण, देवस्य त्वा यो मे दण्डः, धर्म्यं सदाचारं, ब्राह्मणो हृद्गाभिः, अन्ये बान्धवाः, तद्भार्यापुत्रयोः, मध्याह्ने जले शुद्धे, परस्योदके मृत्पिण्डान्, तिलसक्तुदधिलाजं चेति पञ्चदश ॥ १५ ॥

द्वितीयः प्रश्नः समाप्तः ।

## अथ तृतीयः प्रश्नः ।

### प्रथमः खण्डः ।

गृहस्थाश्रमी द्वे यज्ञोपवीते वैणवदण्डं कमण्डलुं च धारयेत् ॥ १ ॥

स्नात्वा सभार्यो गृह्याग्नौ गार्ह्याणि कर्माणि श्रौताग्निषु श्रौतानि कुर्यात् ॥ २ ॥

सायं च होमान्तेऽतिथीनभ्यागतान् प्राशयित्वा मितं प्राश्य पत्न्या शयीत ॥ ३ ॥

आर्द्रपादः प्रत्यगुत्तराशिराश्च न स्वपिति ॥ ४ ॥

ऋतुरात्रिषु स्वभार्यामुपगच्छेत् ॥ ५ ॥

आदौ त्रिरात्रमृतुमतीगमनसहासनशयनानि वर्जयेत् ॥ ६ ॥

परदारान्न सङ्गच्छेत्, परदारगमनादायुःश्रीब्रह्मवर्चसं विनश्यति ॥ ७ ॥

भार्यया सह नाश्नाति ॥ ८ ॥

अश्नतीं तां जृम्भमाणां नग्नां च नावलोकयेत् ॥९॥

असत्यवादं वर्जयति, असत्यात् परं पापं सत्यात् परो धर्मश्च नास्ति ॥ १० ॥

सर्वप्राणिहितोऽद्रोहेणैव जीवेत् ॥ ११ ॥

शुद्धार्थवान् कुसूलधान्यः कुम्भीधान्योऽश्वस्तनिको वा स्यात् ॥ १२ ॥

द्विजातिः पतितान्त्यजातान् न स्पृशेत् ॥ १३ ॥

उदयेऽस्तमये च सूर्यं नेक्षेत ॥ १४ ॥

देवगुरुविप्रघृतक्षीरदधिमृत्तोयसमिद्दर्भाग्निवनस्पतीन् प्रदक्षिणं गच्छेत् ॥ १५ ॥

इति तृतीयस्य प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

स्नातकराजगुरुश्रेष्ठरोगिभारभृदन्तर्वत्नीनां पन्था देयः ॥ १ ॥

वातार्करश्मिभिः पन्थानः शुध्यन्ति ॥ २ ॥

परस्यासनशयनान्यदत्तानि नोपयुञ्जीत ॥ ३ ॥

दत्तेषूपयुक्तेषु स्वपुण्यचतुर्थांशो जहाति ॥ ४ ॥

अन्योपयुक्तानि वस्त्रमाल्योपानच्छत्राणि नैव धारयेत् ॥ ५ ॥

अग्नौ पादं न (दा ? ता)पयेत् ॥ ६ ॥

नैनं मुखेन धमेद्, न पादेन स्पृशेद्, अधःपा(दो ? दे) न कुर्यात् ॥ ७ ॥

अग्नावग्निं जलं वा देवालयेऽग्नौ जले च मूत्रपुरीषपूयशोणितरेतःश्लेष्मोच्छिष्टाङ्गनिष्पेषान् न प्रक्षिपेत् ॥८॥

नग्नां परस्त्रियं विण्मूत्रे च न पश्येत् ॥ ९ ॥

उच्छिष्टो देवार्कचन्द्रग्रहनक्षत्रतारा नेक्षेत ॥ १० ॥

देवगुरुस्नातकदीक्षितराजगोश्रेष्ठानां छायां नाक्रामति ॥ ११ ॥

इन्द्रधनुः परस्मै न दर्शयेद्, न वदेत् ॥ १२ ॥

स्वपन्तं नावबोधयति ॥ १३ ॥

एकोऽध्वानं न गच्छेत् ॥ १४ ॥

परक्षेत्रे चरन्तीं गां धयन्तं वत्सं च न वारयेद्, नैवाचक्षीत ॥ १५ ॥

जीर्णमलवासा न स्यात् ॥ १६ ॥

इति तृतीयस्य द्वितीयः खण्डः ।

अथ तृतीयः खण्डः ।

अक्षैः क्रीडां प्रेतधूमं बालातपं च वर्जयेत् ॥ १ ॥

केशरोमतुषाङ्गारकपालास्थिविण्मूत्रपूयशोणितरेतःश्लेष्मोच्छिष्टान् नाधितिष्ठेत् ॥ २ ॥

अमेध्यालिप्ताङ्गो यावल्लेपगन्धेन शङ्का न स्यात्, तावन्मृत्तोयैः शोधयेत् ॥ ३ ॥

पतितान्त्यजमूर्खाधार्मिकवैरिभिः सार्धं न वसेत् ॥४॥

उच्छिष्टोऽशुचिर्वा देवगोविप्राग्नीन् न स्पृशेत् ॥ ५ ॥

देवान् वेदान् राजगुरुमातापितॄन् विद्वद्ब्राह्मणान् नावमन्येत, न निन्देत्। अवमन्ता निन्दकश्च विनश्यति ॥६॥

सर्वभूतकुत्सां ताडनं च न कुर्वीत ॥ ७ ॥

गुरुणा मातापितृभ्यां तत्पित्राद्यैर्भ्रातृपितृभ्रातृमातुलाचार्यर्त्विगाद्यैर्विवादं नाचरेत् ॥ ८ ॥

सर्वशुद्धिषु पुरुषस्यार्थशुद्धिः स्त्रीशुद्धिरन्नशुद्धिश्च श्रेष्ठतमा स्याद्, द्रव्येषु रत्नानि ॥ ९ ॥

सौवर्णरजतताम्रमयान्यद्भिः शोधयत्यग्नौ वा स्पर्शयेत् ॥ १० ॥

ताम्रत्रपुसीसायसाद्यान्यम्लवारिभिर्दारुदन्तजातानि तक्षणाद्धावनाद्, यज्ञपात्राणि दक्षिणपाणिना मार्जनात् क्षालनाद्वा संशोध्यानि ॥ ११ ॥

इति तृतीयस्य तृतीयः खण्डः

अथ चतुर्थः खण्डः ।

चर्ममयं संहतानि वस्त्राणि शाकमूलफलानि च प्रोक्षति, अल्पानि क्षालयेत् ॥ १ ॥

घृतादीनि द्रव्याण्युत्पूयोल्कया दर्शयेत् ॥ २ ॥

कौशेयाविकान्यूषरैरंशुपट्टानि श्रीफलैः शङ्खशुक्तिगोशृङ्गाणि सर्षपैः सवारिभिर्मृन्मयानि पुनर्दाहेन गृहं मार्जनोपलेपनाप्सेकैर्भूमिं खननान्यमृत्पूरणगोवासकाद्यैर्मार्जनाद्यैश्च शोधयेत् ॥ ३ ॥

गोतृप्तिकरं भूगतं तोयं दोषविहीनं सुपूतम् ॥४॥

वाक्शस्तं वारिनिर्णिक्तमदुष्टम् ॥ ५ ॥

योषिदास्यं कारुहस्तः प्रसारितं पण्यं च सर्वदा शुद्धम् ॥ ६ ॥

शकुन्युच्छिष्टं फलमनिन्द्यम् ॥ ७ ॥

मशकमक्षिकानिलीनं तद्वि(द्रू ? प्रु)षश्च न दूष्याणि ॥

वाय्वग्निसूर्यरश्मिभिः स्पृष्टं च मेध्यम् ॥ ९ ॥

आतुरे बाले पचनालये च शौचं न विचारणीयं, यथाशक्ति स्यात् ॥ १० ॥

विण्मूत्राभ्यां बह्वापो न दूष्याः ॥ ११ ॥

परस्याचामतस्तोयबिन्दुभिर्भूमौ निपत्योद्गतैः पादस्पृष्टैराचमनीयं नाशुद्धि स्यात् ॥ १२ ॥

इति तृतीयस्य चतुर्थः खण्डः ।

अथ पञ्चमः खण्डः ।

वानप्रस्थो नित्यस्वाध्यायी कुशेध्मादीनग्न्यर्थं शाकमूलफलादीनशनार्थं च शुचौ जाता(न्) हरेत् ॥ १ ॥

अन्याधीनमन्योस्पृष्टमशुचौ जातं गोरस च वर्जयेत् ॥ २ ॥

कृष्टां भूमिं नाक्रामति ॥ ३ ॥

धान्यधनसञ्चयं न कुर्वीत ॥ ४ ॥

वस्त्रं नाच्छादयेत् ॥ ५ ॥

मधूक्ते तोयं मांसोक्ते पैष्टिकं गृह्णाति ॥ ६ ॥

सर्वभूतेषु दयालुः समः क्षान्तः शुचिर्निरसूयकः सुखे निःस्पृहो मङ्गल्यवानीर्ष्याकार्पण्यवर्जी मत्स्यादीन् दशकान् सीरकृष्टजातानि कन्दमूलफलशाकादीनि च त्यजन् जटाश्मश्रुरोमनखानि धारयन् त्रिकालस्नानी धराशयो वन्यैरेव चरुपुरोडाशान् निर्वपेत् ॥ ७ ॥

पलाण्ड्वादीन् निर्यासं श्वेतवृन्ताकं सुनिषण्णकं श्लेष्मातकं वृञ्जकं (?) चित्रकं शिग्रु भूस्तृणं कोविदारं मूलकं च वर्जयति ॥ ८ ॥

मुनेः सर्वं मांसं गोमांसतुल्यम् ॥ ९ ॥

धान्याम्लं सुरासमं भवति ॥ १० ॥

पूर्वसञ्चिताशनं पूर्वाणि वसनानि आश्वयुजे मासि त्यजति ॥ ११ ॥

वेदवेदान्तेन ध्यानयोगी तपः समाचरति ॥ १२ ॥

अपत्नीकोऽनग्निरदारोऽनिकेतनो वृक्षमूले वसन् वानप्रस्थाश्रमेषु गृहस्थानां गृहेषु भिक्षां भिक्षित्वा अम्बुपार्श्वे शुद्धे पर्णे प्राणयात्रामात्रमन्नं भिक्षुवदश्नाति ॥ १३ ॥

शरीरं शोषयन्नुत्तरमुत्तरं तीव्रं तपः कुर्यात् ॥ १४ ॥

इति तृतीयस्य पञ्चमः खण्डः ।

अथ षष्ठः खण्डः ।

भिक्षुः स्नात्वा नित्यं प्रणवेनात्मानं तर्पयेत् ॥ १ ॥

तेनैव तं नमस्कुर्यात् ॥ २ ॥

षडवरान् प्राणायामान् कृत्वा शतावरां सावित्रीं जप्त्वा सन्ध्यामुपासीत ॥ ३ ॥

अप्पवित्रेणोत्पूताभिरद्भिराचामेत् ॥ ४ ॥

काषायधारणं सर्वत्यागं मैथुनवर्जनमस्तैन्यादीन्याचरेत् ॥ ५ ॥

असहायोऽनग्निरनिकेतनो निस्सञ्चयी सम्मानावमानसमो विवादक्रोधलोभमोहानृतवर्जी ग्रामाद्बहिर्विविक्ते मठे देवालये वृक्षमूले वा वसेत् ॥ ६ ॥

चातुर्मास्यादन्यत्रैकाहादूर्ध्वमेकस्मिन् देशे न वसेत् ॥ ७ ॥

वर्षाश्चातुर्मास्यमेकत्रैव वसेत् ॥ ८ ॥

त्रिदण्डे काषायाप्पवित्रादीन् योजयित्वा कण्ठे वामहस्तेन धारयन् दक्षिणेन भिक्षापात्रं गृहीत्वैककाले विप्राणां शुद्धानां गृहेषु वैश्वदेवान्ते भिक्षां चरेत् ॥ ९ ॥

भूमौ निवीक्ष्य जन्तून् परिहरन् पादं न्यसेत् ॥ १० ॥

अधोमुखस्तिष्ठन् भिक्षामालिप्सेत ॥ ११ ॥

इति तृतीयस्य षष्ठः खण्डः ।

अथ सप्तमः खण्डः ।

गोदोहनकालमात्रं तदर्थं स्थित्वा व्रजेत् ॥ १ ॥

अलाभेऽवमानेऽप्यविषादी लब्धे सम्मानेऽप्यसन्तोषी स्यात् ॥ २ ॥

द्रुतं विलम्बितं वा न गच्छेत् ॥ ३ ॥

भिक्षाकालादन्यत्र परवेश्म न गन्तव्यम् ॥ ४ ॥

भिक्षितुं क्रोशादूर्ध्वं न गच्छेत् ॥ ५ ॥

भिक्षां चरित्वा तोयपार्श्वे प्रक्षालितपाणिपाद आचम्य 'उदुत्यमि'त्यादित्याय 'अतो देवा' इति विष्णवे 'ब्रह्म जज्ञानमि'ति ब्रह्मणे च भिक्षाग्रं दत्त्वा 'सर्वभूतेभ्यो नम' इति बलिं प्रक्षिपेत् ॥ ६ ॥

प्राणाग्निहोत्रविधिनात्मयज्ञं सङ्कल्प्य प्राणयात्रामात्रमष्टौ ग्रासांश्चाश्नीयात् ॥ ७ ॥

कामं नाश्नाति ॥ ८ ॥

वस्त्रपूतं जलं पीत्वा चाचामति ॥ ९ ॥

निन्दाक्रोशौ न कुर्वीत ॥ १० ॥

बन्धून् ज्ञातींस्त्यजेत् ॥ ११ ॥

वंशचारित्रं तपः श्रुतं न वदेत् ॥ १२ ॥

सङ्गं त्यक्त्वा नियमयमी प्रियं सत्यं वदन् सर्वभूतस्याविरोधी समः सदाध्यात्मरतो ध्यानयोगी नारायणं परं ब्रह्म पश्यन् धारणाद्धारयेदक्षरं परं ब्रह्माप्नोति, 'नारायणपरं ब्रह्मे'ति श्रुतिः ॥ १३ ॥

इति तृतीयस्य सप्तमः खण्डः ।

अथाष्टमः खण्डः ।

संन्यासिनोऽनाहिताग्नेर्देहं मृतं पुत्रोऽन्यो वा तृणैरन्तरीकृत्य शुद्धैर्ब्राह्मणैर्यन्त्रेण वा संनिधौ *समुद्रगाया नद्यास्तीरे वासैकदेशे सृगालादिभिरस्पृश्यं यथा तथावटं खनति ॥ १ ॥

गायत्र्या स्नापयित्वा तयावटे तत्रासयित्वा शाययित्वा वा दक्षिणे हस्ते वैष्णवैर्मन्त्रैस्त्रिदण्डं संन्यस्य सव्ये 'यदस्य पारे रजस' इति शिक्यमप्पवित्रमुदरे सावित्र्या भिक्षापात्रं गुह्यप्रदेशे 'भूमिर्भूमिमि'ति काषायं मृद्ग्रहणीं कमण्डलुं च संन्यस्यापिदध्यात् ॥ २ ॥

तस्मिन् सृगालादिभिः स्पृष्टे तत्कर्ता पापीयान् भवति ॥ ३ ॥

आहिताग्नेरग्नीनात्मन्यारोप्य संन्यासिनो मृतं देहं गायत्र्या स्नापयित्वा पूर्ववद् वाहयित्वा शुद्धे देशे निधाय लौकिकाग्नौ तदग्निम् 'उपावरोहे'त्यवरोप्य 'पवित्रं त' इति घृतक्षीरमास्ये प्रक्षिप्य पूर्ववत् त्रिदण्डादि विन्यस्य ब्रह्ममेधेन विधिना पितृमेधेन वाहिताग्निमन्त्रैस्तदग्निभिर्दहनमाचरति ॥ ४ ॥

तयोराशौचोदकबलिदानैकोद्दिष्टादीन् नैव कुर्यात् ॥

* वाहयित्वेति अत्रापेक्षितम्

नारायणबलिं करोति ॥ ६ ॥

तद्दहनं खनित्वा पिधानं दहनं नारायणबलिं वा यः कुर्यात्, सोऽश्वमेधफलं समाप्नुयात् ॥ ७ ॥

इति तृतीयस्याष्टमः खण्डः ।

अथ नवमः खण्डः ।

नारायणबलिं, नारायणादेव सर्वार्थसिद्धिरिति ब्राह्मणाद्यैर्नरैर्हतस्यात्मघातिनो रज्जुशस्त्रोदकाशनिदंष्ट्रिपशुसर्पादिभिः सर्वपापमृतस्यादाह्यानामन्येषां भिक्षोश्चैकादशदिनादूर्ध्वं महापातकिनां पञ्चानां द्वादशसंवत्सरादूर्ध्वं सपिण्डीकरणस्थाने मृतकार्थं परपक्षे द्वादश्यां श्रवणे वा करोति ॥ १ ॥

पूर्वेऽहनि द्वादश ब्राह्मणान् निमन्त्रयेत् ॥ २ ॥

अपरेऽह्नि विष्णोरालयपार्श्वे नदीतीरे गृहे वाग्न्यायतनं कृत्वाघारं जुहुयात् ॥ ३ ॥

अग्निं परिस्तीर्याग्नेर्वायव्यां विष्टरे दर्भेषु तद्रूपं सुवर्णं वा संस्थाप्य पुरुषं ध्यायन् 'ओं भूः पुरुषमि' त्याद्यैः प्राङ्मुखं देवं नारायणमावाह्यासनपाद्याचमनानि दद्यात् ॥

पुरुषसूक्तेन स्नापयित्वा 'नारायणाय विद्महे' इति अष्टाक्षरमन्त्रेण वा वस्त्रोत्तरीयाभरणपाद्याचमनपुष्पगन्धधू-

पदीपाक्षताचमनैरर्चयति ॥ ५ ॥

इति तृतीयस्य नवमः खण्डः ।

अथ दशमः खण्डः ।

केशवाद्यैर्द्वादशनामभिरद्भिस्तर्पयेत् ॥ १ ॥

अग्निं परिषिच्य सहस्रशीर्षाद्यैर्विष्णोर्नुकाद्यैर्द्वादशनामभिश्चाज्यं चरुं जुहुयात् ॥ २ ॥

गुलाज्यफलयुक्तं पायसं हविर्विष्णुगायत्र्या देवेशाय निवेद्य पाद्याचमनीयमुखवासं दद्यात् ॥ ३ ॥

अग्नेर्दक्षिणे दर्भेषूत्तराग्रेषु दक्षिणादि(?)अर्चयित्वा नारायणाय सहस्रशीर्षाय सहस्राक्षाय सहस्रपादाय परमपुरुषाय परमात्मने परंज्योतिषे परब्रह्मणेऽव्यक्ताय सर्वकारणाय यज्ञेश्वराय यज्ञात्मने विश्वेभ्यो देवेभ्यः सर्वाभ्यो देवताभ्यः साध्येभ्य इत्येतैर्नम इत्यन्तैः पायसं बलिं दत्त्वा आज्यमेभिर्जुहोति ॥ ४ ॥

ब्राह्मणान् पादौ प्रक्षाल्य नवानि वस्त्रोत्तरीयाभरणानि दत्त्वा पुष्पाद्यैः पूजयित्वा द्वादशमूर्तिं ध्यायन् उपदंशघृतगुलदधिफलयुक्तं श्वेतमन्नं भोजयित्वा यथाशक्ति सुवर्णं दक्षिणां ददाति ॥ ५ ॥

सहस्रशीर्षाद्यैः स्तुत्वा द्वादशनामभिः प्रणमेत् ॥

अन्तहोमं जुहोति ॥ ७ ॥

(अ? इ)ष्टां परां गतिं स गत्वा विष्णुलोके महीयते ॥ ८ ॥

इति तृतीयस्य दशमः खण्डः ।

---

अथैकादशः खण्डः ।

चातुर्वर्ण्यसंकरेणोत्पन्नानामनुलोमप्रतिलोमान्तरालव्रात्यानामुत्पत्तिं नाम वृत्तिं च ॥ १ ॥

ऊर्ध्वजातादधोजातायां जातोऽनुलोमः । अधरोत्पन्नादूर्ध्वजातायां जातः प्रतिलोमः । ततोऽनुलोमादनुलोम्यां जातोऽन्तरालः । प्रतिलोमात् प्रतिलोम्यां जातो व्रात्यो भवति ॥ २ ॥

ब्रह्मणो मुखादुद्भूता ब्राह्मणा ब्राह्मण्यश्च ब्रह्मर्षयः पत्न्यो बभूवुः । तेषां गोत्रोत्पन्नाद् ब्राह्मण्यां(नां?अ)सगोत्रायां विधिना समन्त्रकं गृहीतायां जातो ब्राह्मणः शुद्धो भवेत् ॥ ३ ॥

विधिहीनमन्यपूर्वायां मृतभर्तृकायां गोलको जीवभर्तृकायां कुण्डश्च विप्रौ द्वौ निन्दितौ स्याताम् ॥ ४ ॥

तस्मादधो बाहुभ्यामुत्पन्नात् क्षत्रियात् क्षत्रियायां

विधिवज्जातः क्षत्रियः शुद्धः ॥ ५ ॥

तयोरधिकं गूढोत्पन्नोऽशुद्धो भोजाख्यो नैवाभिषेच्यः पट्टबन्धो राज्ञः सैनापत्यं करोति ॥ ६ ॥

शुद्धाभावेऽपट्टबन्धो *(नृपास्ति?) तद्वृत्तं राजवत् स्यात् ॥ ७ ॥

अधस्तादूरुभ्यामुत्पन्नाद् वैश्याद् वैश्यायां तथा वैश्यः शुद्धः ॥ ८ ॥

विधिवर्जं मणिकारोऽशुद्धो मणिमुक्तादिवेधः शङ्खवलयकारी स्यात् ॥ ९ ॥

इति तृतीयस्यैकादशः खण्डः।

अथ द्वादशः खण्डः।

अथ पद्भ्यामुत्पन्नाच्छूद्राच्छूद्रायां न्यायेन शूद्रः शुद्धः ॥ १ ॥

जारान्मालवको निन्दितशूद्राद् अश्वपालोऽश्वतृणहारी च। इत्येते चातुर्वर्णिकाः ॥ २ ॥

---

* 'नृपोऽस्ति' इति स्यात्। 'पट्टबन्धानुपासीत' इत्यपि तत्र पाठ कल्पयित शक्य इव भाति।

तेषामेव सङ्करेणोत्पन्नाः सर्वेऽनुलोमाद्याः ॥ ३ ॥

ब्राह्मणात् क्षत्रियकन्यायां जातः *सवर्णोऽनुलोमेषु मुख्यः ॥ ४ ॥

अस्य वृत्तिराथर्वणं कर्माश्वहस्तिरथसंवाहनमारोहणं राज्ञः सैनापत्यं चायुर्वेदकृत्यं वा ॥ ५ ॥

गूढोत्पन्नोऽभिषिक्ताख्यः ॥ ६ ॥

अभिषिक्तश्चेन्नृपो भूयाद् , अष्टाङ्गमायुर्वेदं भूततन्त्रं वा स पठेत् ॥ ७ ॥

तदुक्ताचारो दयायुक्तः सत्यवादी तद्विधानेन सर्वप्राणिहितं कुर्यात् ॥ ८ ॥

ज्योतिर्गणनादिकाधिकावृत्तिर्वा ॥ ९ ॥

विप्राद्वैश्यायामम्बष्ठः कक्ष्याजीवाग्नेय (?) नर्तको ध्वजविश्रावी शल्यचिकित्सी ॥ १० ॥

जारात् कुम्भकारः, कुलालवृत्तिर्नापितो नाभेरूर्ध्ववप्ता च ॥ ११ ॥

क्षत्रियाद्वैश्यायां मद्गुः श्रेष्ठित्वं प्राप्तो महानमाख्यश्च वैश्यवृत्तिः क्षात्रकर्म नाचरति ॥ १२ ॥

गूढादाश्विकोऽश्वक्रयविक्रयी स्यात् ॥ १३ ॥

इति तृतीयस्य द्वादशः खण्डः ।

* सवर्ण इति संज्ञा ।

अथ त्रयोदशः खण्डः ।

विप्राच्छूद्रायां पारशवः भद्रकालीपूजा(ना?मा)-त्रकर्माङ्गविद्यातूर्यघोषणमर्दनवृत्तिः ॥ १ ॥

जारोत्पन्नो निषादो व्यालादिमृगहिंसाकारी ॥ २ ॥

राजन्यतः शूद्रायामुग्रः सुदण्ड्यदण्डनकृत्यः ॥ ३ ॥

जाराच्छूलिकः शूलारोहणादियातनाकृत्यः ॥ ४ ॥

वैश्यतः शूद्रायां चूचुकः क्रमुकताम्बूलशाककाष्ठा-दिक्रयविक्रयी ॥ ५ ॥

गूढात् कटकारः कटकारी चेति ॥ ६ ॥

ततोऽनुलोमादनुलोमायां जातश्चानुलोमः पितुर्मा-तुर्वा जातिं वृत्तिं भजेत ॥ ७ ॥

क्षत्रियाद्विप्रकन्यायां मन्त्रवज्जातः सूतः प्रतिलो-मेषु मुख्योऽयं मन्त्रहीनोपनीतो द्विजधर्महीनः ॥ ८ ॥

अस्य वृत्तिर्धर्मानुबोधनं राज्ञोऽन्नसंस्कारश्च ॥ ९ ॥

जारेण मन्त्रहीनजो रथकारो द्विजत्वविहीनः शूद्र-कृत्योऽश्वानां पोषणादिपरिचर्याजीवी ॥ १० ॥

वैश्याद् ब्राह्मण्यां मागधः शूद्रैरप्यभोज्यान्नोऽस्पृश्यः सर्ववन्दी प्रशंसाकीर्तनगानप्रेषणवृत्तिः ॥ ११ ॥

शूद्राच्चक्री लवणतैलविक्रेता स्यात् ॥ १२ ॥

इति तृतीयस्य त्रयोदशः खण्डः ।

अथ चतुर्दशः खण्डः ।

वैश्यान्नृपायामायोगवस्तन्तुवायः पटकर्ता वस्त्रकांस्योपजीवी ॥ १ ॥

शूद्राचारात् पुलिन्दोऽरण्यवृत्तिः दुष्टमृगघाती ॥ २ ॥

शूद्रात् क्षत्रियायां पुल्कसः कृतकां वार्क्षां वा सुरां हृत्वा पाचको विक्रीणाति ॥ ३ ॥

चोरवृत्ताद्वेलवो जम्भननर्तनगानकृत्यः ॥ ४ ॥

शूद्राद्वैश्यायां वैदेहकः शूद्रास्पृश्यस्तैरप्यभोज्यान्नो वन्यवृत्तिरजामहिषीगोपालः तद्रसान् विक्रयी ॥ ५ ॥

चौर्याच्चक्रिको लवणतैलपिण्याकजीवी ॥ ६ ॥

शूद्राद् ब्राह्मण्यां चण्डालः सीसकालायसाभरणो वर्ध्राबन्धकण्ठः कक्षे झल्लरीयुक्तो यतस्ततश्चरन् सर्वकर्मबहिष्कृतः पूर्वाह्णे ग्रामादौ वीथ्यामन्यत्रापि मलान्यपकृष्य बहिरपोहयति ॥ ७ ॥

ग्रामाद् बहिर्दूरे स्वजातीयैर्निवसेत् ॥ ८ ॥

मध्याह्नात् परं ग्रामे न विशत्ययं विशेच्चेद्राज्ञा वध्योऽन्यथा भ्रूणहत्यामवाप्नोति ॥ ९ ॥

अन्तरालव्रात्याच्चूचुकाद् विप्रायां तक्षकोऽस्पृश्यो झल्लरीहस्तो दारुकारः सुवर्णकारोऽयस्कारः कांस्यकारो वा ॥ १० ॥

क्षत्रियायां मत्स्यबन्धुर्मत्स्यबन्धी ॥ ११ ॥

वैश्यायां सामुद्रः समुद्रपण्यजीवी मत्स्यघाती च स्यात् ॥ १२ ॥

इति तृतीयस्य चतुर्दशः खण्डः ।

अथ पञ्चदशः खण्डः ।

अम्बष्ठाद् विप्रायां नाविकः समुद्रपण्यमत्स्यजीवी समुद्रलङ्घनान्नावं प्लावयति ॥ १ ॥

क्षत्रियायामधोनापितो नाभेरधोरोमवप्ता ॥ २ ॥

मद्गोर्विप्रायां वेणुको वेणुवीणावादी ॥ ३ ॥

क्षत्रियायां कर्मकारः कर्मकारी ॥ ४ ॥

वैदेहकाद् विप्रायां चर्मकारः ॥ ५ ॥

चर्मजीवान्नृपा(यां) सूचिकः सूचीवेधकृत्यवान् ॥

आयोगवाद् विप्रायां ताम्रजीवः ॥ ७ ॥

ताम्रजीवान्नृपायां खनकः खननजीवी ॥ ८ ॥

खनकान्नृपायां मृद्बन्धकः शूद्रास्पृश्यो वस्त्रनिर्णेजकः ॥ ९ ॥

पुल्कसाद् विप्रायां रजको वस्त्राणां रजोनिर्णेजकः ॥ १० ॥

चण्डालाद् विप्रायां श्वपचः चण्डालवच्चिह्नयुक्तो नित्यनिन्द्यः सर्वकर्मबहिष्कार्यो नगर्यादौ मलापोहकः श्मशाने वसन् हेयपात्रग्राही प्रेतबन्धकं विसृजेत्। वध्यान् हत्वा तद्वस्त्रादीन् गृह्णीयात्। पराधीनाहारी भिन्नपात्रभोजी श्वमांसभक्षी चर्मवारवाणवाणिज्यकारी स्यात् ॥११॥

तस्मान्निकृष्टे सुते समुत्पन्ने पतितो नष्टो घोरान् नरकान् व्रजति ॥ १२ ॥

सत्पुत्रो नरकेभ्यस्त्रायकः पितॄन् पावयित्वा शुभाँल्लोकान् नयति ॥ १३ ॥

ततो ब्राह्मणाद्याः सवर्णायां विधिवत् पुत्रमुत्पादयेयुरिति विखनाः ॥ १४ ॥

इति तृतीयस्य पञ्चदशः खण्डः ।

---

गृहस्थाश्रमी द्वे, स्नातकराजगुरु, अक्षैः क्रीडां, चर्ममयं संहतानि, वानप्रस्थो नित्यस्वाध्यायी, भिक्षुः

स्नात्वा, गोदोहनकालमात्रं, संन्यासिनोऽनाहिताग्नेः, नारायणबलिं, केशवाद्यैर्द्वादशनामभिः, चातुर्वर्ण्यसङ्करेण, अथ पद्भ्यामुत्पन्नाद्, विप्राच्छूद्रायां, वैश्यान्नृपायाम्, अम्बष्ठाद् विप्रायामिति पञ्चदश ॥ १५ ॥

तृतीयः प्रश्नः समाप्तः ।

इति वैखानसधर्माः समाप्ताः ।

शुभं भूयात् ।

# Ready for sale.

भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. 1 0 0

## Trivandrum Sanskrit Series.

| | | | | |
|---|---|---|---|---|
| No. 1 — दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2 — अभिनवकौस्तुभमाला - दक्षिणामूर्तिस्तवौ by Krishṇalîlâsukamuni. | 0 | 2 | 0 |
| No. 3 — नलाभ्युदयः (Kâvya) by Vâmana Bhaṭṭa Bâṇa. | 0 | 4 | 0 |
| No. 4 — शिवलीलार्णवः (Kâvya) by Nîlakaṇṭha Dîkshita. | 2 | 0 | 0 |
| No. 5 — व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6 — दुर्घटवृत्तिः (Vyâkaraṇa) by Saraṇadeva. | 2 | 0 | 0 |
| No 7 — ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî. | 2 | 4 | 0 |
| No. 8 — प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No 9 — विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10 — मातङ्गलीला (Gajalakshana) by Nîlakaṇtha. | 0 | 8 | 0 |
| No. 11 — तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12 — परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13 — सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 0 | 0 |
| No. 14 — नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |

| | | | |
|---|---|---|---|
| No. 15 — स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. | 2 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Do.) Do. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् (Do.) Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyaṇa Bhaṭṭa with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mímâmsâ) by Nârâyaṇa Bhaṭṭa and Nârâyaṇa Paṇḍita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa | 1 | 8 | 0 |
| No. 21—बालचरितम् (Do.) Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (1 & 2 Kâṇḍas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinatha and Vivaraṇa of Ṇârayaṇâ Paṇdita (1 & 2 Sargas) | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas | 0 | 8 | 0 |

***Apply to:—***

*The Agent for the sale of*

*Government Sanskrit Publications,*

*Trivandrum.*